# ॥ उमामहेश्वरस्तोत्रम् ॥

श्री शङ्कराचार्य कृतम् ।
नमः शिवाभ्यां नवयौवनाभ्याम्
परस्पराश्लिष्टवपुर्धराभ्याम् ।
नागेन्द्रकन्यावृषकेतनाभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ १॥

नमः शिवाभ्यां सरसोत्सवाभ्याम्
नमस्कृताभीष्टवरप्रदाभ्याम् ।
नारायणेनार्चितपादुकाभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ २॥

नमः शिवाभ्यां वृषवाहनाभ्याम्
विरिञ्चिविष्ण्विन्द्रसुपूजिताभ्याम् ।
विभूतिपाटीरविलेपनाभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ ३॥

नमः शिवाभ्यां जगदीश्वराभ्याम्
जगत्पतिभ्यां जयविग्रहाभ्याम् ।
जम्भारिमुख्यैरभिवन्दिताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ ४॥

नमः शिवाभ्यां परमौषधाभ्याम्
पञ्चाक्षरी पञ्जररञ्जिताभ्याम् ।
प्रपञ्चसृष्टिस्थिति संहृताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ ५॥

नमः शिवाभ्यामतिसुन्दराभ्याम्
अत्यन्तमासक्तहृदम्बुजाभ्याम् ।
अशेषलोकैकहितङ्कराभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ ६॥

नमः शिवाभ्यां कलिनाशनाभ्याम्
कङ्कालकल्याणवपुर्धराभ्याम् ।
कैलासशैलस्थितदेवताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ ७॥

नमः शिवाभ्यामशुभापहाभ्याम्
अशेषलोकैकविशेषिताभ्याम् ।
अकुण्ठिताभ्याम् स्मृतिसंभृताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ ८॥

नमः शिवाभ्यां रथवाहनाभ्याम्
रवीन्दुवैश्वानरलोचनाभ्याम् ।
राकाशशाङ्काभमुखाम्बुजाभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ ९॥

नमः शिवाभ्यां जटिलन्धरभ्याम्
जरामृतिभ्यां च विवर्जिताभ्याम् ।
जनार्दनाब्जोद्भवपूजिताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ १०॥

नमः शिवाभ्यां विषमेक्षणाभ्याम्
बिल्वच्छदामल्लिकदामभृद्भ्याम् ।
शोभावती शान्तवतीश्वराभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ ११॥

नमः शिवाभ्यां पशुपालकाभ्याम्
जगत्रयीरक्षण बद्धहृद्भ्याम् ।
समस्त देवासुरपूजिताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥ १२॥

स्तोत्रं त्रिसन्ध्यं शिवपार्वतीभ्याम्
भक्त्या पठेद्द्वादशकं नरो यः ।
स सर्वसौभाग्य फलानि भुङ्क्ते
शतायुरान्ते शिवलोकमेति ॥ १३॥

इति उमामहेश्वरस्तोत्रं सम्पूर्णम् ॥